**केवलम्** आगमनिरपेक्षं[1] **लोकस्य** व्यवहर्तुः[2] जनस्य **बुद्धयैव मतेः** अवग्रहादिज्ञानस्य **लक्षणेन** प्रत्यक्षोक्तेन **सङ्ग्रह** इति। एतदुक्तं भवति–व्यवहर्तुर्मतिज्ञानेऽपि 'लक्षणलेश-दर्शनात् प्रत्यक्षप्रसिद्धेः तदनुरोधेन तदपि प्रत्यक्षतया सङ्गृहीतं न मुख्यतः। मुख्यतः[4] पुनर-वध्यादिज्ञानमेव प्रत्यक्षम्, समग्रस्य स्पष्टतालक्षणस्य तत्रैव भावात्। एवमपि तथा-
५ विधाल्लक्षणादेव प्रत्यक्षव्यपदेशात् किमात्ममात्राश्रितत्वेन कल्पनमिति चेत्; न; प्रवृत्ति[5]-निमित्तवत् व्युत्पत्तिनिमित्तेनापि तत्र तद्भावनिवेदनार्थत्वात् तथातत्कल्पनस्य। ततः स्थितं **केवल**मित्यादि। कथमागमस्य परोक्षत्वमुक्तम् '**अनुमानं तथागमः**' इति, तस्याज्ञानत्वात्, ज्ञानस्यैव चागमे परोक्षत्वकथनादिति चेत्? अत्राह–

**स्याद्वादः श्रवणज्ञानहेतुत्वाच्चक्षुरादिवत्।**
१० **प्रमा [ प्रमितिहेतुत्वात्प्रामाण्यमुपगम्यते ]** ॥८९॥ इति।

**श्रवणं** शब्दविषयं प्रत्यक्षं तस्य कार्यं यत् यथार्थमभिधेय**ज्ञानं** तस्य **हेतुत्वात् स्याद्वादो** भगवत्प्रवचनं प्रमाणमुपचारात् न मुख्यतः। मुख्यतस्तज्जनितस्य ज्ञानस्यैव प्रामाण्याच्चक्षुरादिवत्। प्रसिद्धं हि चक्षुरादेरुपचारादेव प्रामाण्यं वस्तुतस्तज्जनितस्य ज्ञान-स्यैव रूपादौ प्रामाण्यात्[6]। तत्त्वत एव स्याद्वादे कुतो न प्रामाण्यमिति चेत्[7]; न; मुख्यतो
१५ ज्ञानप्रामाण्यस्यैव नैयायिकस्योपगमात्। प्रमितिहेतुत्वात्[8] प्रामाण्यमुपगम्यत एव उपचारस्या-प्रतिक्षेपात्[9]। तदेवाह–

**प्रमितिहेतुत्वात्प्रामाण्यमुपगम्यते।** इति। सुबोधमेतत्।

न चैवं प्रमेयस्य तत्प्रतिषेधो युक्तः तस्यापि "**अर्थवत्प्रमाणम्**" [ न्यायभा० १।१।१ ] इत्यत्र तद्धेतुत्वेन व्याख्यानात्, न्यायोपस्थापितस्य वचनमात्रेण निषेधायोगात्। ततः स्थितं
२० ज्ञानमेव प्रमाणमिति।

किमिदानीं प्रमाणफलमित्याह–

**प्रमाणस्य फलं तत्त्वनिर्णयादानहानधीः।** इति।

**आदानं** च **हानं** च तयो**र्धीः** बुद्धिः **आदानहानधीः** उपलक्षणमिदम्, तेनोपेक्षा-धीरित्यपि प्रतिपत्तव्यम्। **तत्त्वस्य** जीवादेः **निर्णयः** संशयादिव्यवच्छेदरूपोऽधिगमः तेन
२५ सहादानहानधीः **तत्त्वनिर्णयादानहानधीः** सा **प्रमाणस्य** उक्तलक्षणस्य **फलं** प्रयोजनम्। तत्राव्यवहितं[10] तत्त्वनिर्णयः, व्यवहितमादानहानबुद्धिः प्रमाणतस्तत्त्वनिर्णये पश्चाद्भावात्, तत्त्वनिर्णय एव प्रमाणं "**प्रामाण्यं चेतसां स्वार्थव्यवसायः**" [ ] इति वचनात्। स एव कथं तस्य फलं भेदाभावेन तत्साध्यत्वाभावादिति चेत्; न; कथ-ञ्चिद्भेदस्यापि भावात्। तथाहि न स्वनिर्णय एव प्रमाणम्, स्वपरविभागादेरनिर्णय-
३० विषयत्वेनाभावप्रसङ्गात्। अद्वैतस्य च प्रतिक्षेपात्। नापि परनिर्णय एव; स्वनिर्णयाभावे तस्याप्यनुपपत्तेः। उभयनिर्णये च सिद्धः स्वनिर्णयात्मनस्तस्य परनिर्णयात् तदात्मनश्च

---

१ –र्तुं केवलस्य व्य– आ०, ब०, प०। २ –हर्तुः ज्ञानस्य आ०, ब०, प०। ३ लक्षणे लेश– आ०, ब०, प०। "प्रत्यक्षमञ्जसा स्पष्टमिति प्रागुक्तस्पष्टत्वस्य।"– ता० टि०। ४ –तः पुनरवध्यादिज्ञा– आ०, ब०, प०। ५ –त्तिनं निमित्तवद्व्युत्पत्ति– आ०, ब०, प०। ६ –प्रमाणत एव आ०, ब०, प०। ७ –मिति नैया– आ०, ब०, प०। ८ –त्वात्प्रामा– आ० ब०, प०। ९ –पात्र चैवं आ०, ब०, प०। १० –हितनिर्णयो आ०, ब०, प०।

स्वनिर्णयाद्भेदोऽपीति युक्तं तत्साध्यतया निर्णयस्य तत्फलत्वम्। कथं पुनः सहभाविनः प्रमाणान्निर्णय इति चेत् ? प्रदीपात्तमोऽपहारः कथम् ? तस्यैव तस्मिंस्तद्भावादिति चेत्; समानमन्यत्रापि। न च [1]तत्सहभावनियमः, प्रमाणस्य प्रागपि भावात्। तदन्यदेवेति चेत्; न; अभेदस्यापि प्रत्यभिज्ञानात्। आत्मन्येव तत्प्रत्यभिज्ञानं न प्रमाणे इति चेत्; न; प्रमाणादन्यस्य तस्य प्रतिक्षेपात्। तर्हि निर्णयः फलं कथं तेन प्रमाणस्य व्यपदेशः "**प्रमाणं स्वतो निर्णयः**" [ सिद्धिवि० परि० १ श्लो० २ ] इत्यादौ तन्निष्पादनरूपेणैव तद्व्यपदेशोपपत्तेरिति चेत्; सत्यम्; शक्तिभेदेनैव क्षयोपशमापरनाम्ना प्रमाण[2]भावस्याभ्यनुज्ञानात्। निर्णयेन तु तद्भावकथनं तेनैवाव्यतिरेकेणाफलेन [3]तद्भावो न निर्विकल्पेनाधिगमेनेति ज्ञापनार्थम्। तेनापि तदवस्थितावतिप्रसङ्गः अकिञ्चित्करादावपि दर्शने तत्प्रसङ्गात्। तथा च व्यर्थमव्युत्पत्त्यादिव्यवच्छेदाय तत्र ज्ञानान्तरपरिकल्पनम्। अधिगमादपि तद्व्यवच्छेदरूपादेव तद्व्यवस्थितिश्चेत्; सिद्धस्तर्हि निर्णयादेवासौ, तादृगधिगमस्यैव निर्णयत्वात्। कथं पुनरेकस्यैव ज्ञानस्य प्रमाणफलभावेन भेदः ? सर्वस्यापि वस्तुनः स्वस्वभावव्यवस्थित्या निरंशस्यैवोपपत्तेः। सारूप्याधिगमे भेदेन क्वचित्तद्भावकल्पनं तु व्यावृत्तिभेदादेव न तत्त्वत इति [4]चेत्; न; तद्भेदस्यापि क्वचित्तत्त्वतोभावेऽनेकान्तवादप्रत्युज्जीवनात्। तस्याप्यन्यतस्तद्भेदात् परिकल्पनायामनवस्थाप्रसङ्गात्। ततो दूरं गत्वापि तत्त्वत एव व्यावृत्तिभेदमभ्युपगच्छता क्वचित्प्रमाणफलभावे[5] तद्भेदोऽभ्युपगन्तव्यः प्रतीतिबलस्याविशेषात्। वस्तुतो निर्भेदमेव ज्ञानं स्वतोऽवभासते, ग्राह्यादिभेदस्तु तत्र विप्लवकृत इति चेत्; न; विप्लवस्यापि विप्लवान्तराद्भेदप्रतिभासित्वेऽनवस्थादोषस्य दुष्परिहरत्वात्। स्वतस्तत्प्रतिभासित्वे [6]तु न निर्भागज्ञान[7]प्रतिष्ठानिष्ठितिः। अतो निराकृतमेतत्–"**अविभागोऽपि बुद्ध्यात्मा**" [ प्र० वा० २।३५४ ] इत्यादि। तन्न अनेकान्तप्रद्वेषे सौत्रान्तिकादेः कल्पनयापि प्रमाणफलव्यवस्थापनमुपपन्नम्। भवतु तर्हि प्रमाणादिसकलविकल्पापरामृष्टमेव तत्त्वमिति चेत्; न; तस्य प्रपञ्चतः प्रतिक्षिप्तत्वात्। ततः स्थितं तत्त्वनिर्णयः साक्षात्, आदानादिबुद्धिस्तु पारम्पर्येण फलं प्रमाणस्येति।

परमपि तत्फलं दर्शयन्नाह–

**निःश्रेयसं परं प्रायः [केवलस्याप्युपेक्षणम्]** ॥६०॥ इति।

**निःश्रेयसं** कैवल्यं **परं** प्रकृष्टं पश्चिमं वा प्रमाणस्य फलमिति सम्बन्धः। सति हि प्रमाणतः तत्त्वनिर्णये मिथ्यादर्शनादिपरित्यागेन सम्यग्दर्शना[8]द्यभ्यासतः प्रादुर्भवन्निःश्रेयसं परम्परया प्रमाणस्य फलमिति मन्यते, **प्रायो** बाहुल्येन तत्फलं सर्वत्राभावात्। सम्प्रति केवलज्ञानस्य फलं दर्शयति–**केवलस्याप्युपेक्षणम्** इति। सकलद्रव्यपर्यायगोचरं निरतिशयं ज्ञानं **केवलं** तस्य **उपेक्षणं** सर्वत्रौदासीन्यं फलं [9]तदपोहादिकफलान्तरस्याभावात्। अपिशब्दात् सर्वविषयो निर्णयश्च "**अज्ञाननाशो वा सर्वस्यास्य स्वगोचरे**" [ आप्तमी० श्लो० १०२ ] इति वचनात्, अज्ञाननाशस्य निर्णयरूपत्वात्।

[10]"सत्यं प्रमाणस्य निर्णीतिः फलं सा तु तत्कार्यत्वेन ततो भिन्नैव नानर्थान्तरम्

---

१ तत्सहायनि– आ०, ब०, प०। २ –माणाभाव– आ०, ब०, प०। ३ तद्भावो निर्वि– आ०, ब०, प०। ४ चेत्तत्र त– ता०। ५ –फलतद्भेदो– ता०। ६ तु निर्भाग –आ० ब०, प०। ७ –प्रतिष्ठानिष्ठितः आ०, ब०। –निष्ठतः प०। ८ –नाभ्यासतः आ०, ब०, प०। ९ तदभ्युपायादिकफ– ता०। १० स्वत्वं प्रमा– आ०, ब०, प०।

अत एवोक्तम्–"**यत्रैव जनयेदेनां तत्रैवास्य प्रमाणता**" [ ] इति । इति चेत्; अत्राह–

**प्रत्यक्षं श्रुतविज्ञानहेतुरेव प्रसज्यते** । इति ।

**श्रुत**मभिलापस्तन्मिश्रं **विज्ञानं श्रुतविज्ञानं** दध्योदनादिवद्[1]वृत्तिः तस्य नीलमिद- मित्यादिरूपस्य **हेतुरेव** कारणमेव प्रत्यक्षं निर्विकल्पदर्शनं **प्रसज्यते** न प्रमाणमित्येवकारः । तथाहि न तस्य स्वतः प्रामाण्यम्; अनिर्णयस्वभावत्वात् अकिञ्चित्करवत् । नापि निर्णय- हेतुत्वात्; निर्णयस्य विकल्पत्वेनावस्तुविषयत्वात् । तज्जननात् प्रामाण्ये संशयादिजननादपि तत्प्रसङ्गात् । वस्तुविषय एव [2]निर्णयः, व्यवहर्त्रा तद्विषयस्य वस्तुतयैवाध्यवसायादिति चेत्; किं पुनर्भवतो व्यवहर्त्तरि विश्वासः ? बाढम्, "**प्रामाण्यं व्यवहारेण**" [प्र० वा० १।७] इति वचनादिति चेत्; तर्हि निर्णयस्यैव प्रामाण्यं स्याद् व्यवहर्तुस्तत्रैव तदभिप्रायात्, न निर्विकल्पदर्शनस्य, तत्र तद्गन्धस्यापि व्यवहर्त्रानाघ्राणात् । ततो निराकृतमेतत्– "**गृहीतग्रहणान्नेष्टं सांवृतं प्रमाणम्**" [प्र० वा० १।५] इति । यदि तत्प्रामाण्ये न तत्र विश्वासो नियत[3]वस्तुविषयत्वेऽपि न भवेद[4]र्थजातीयानुपपत्तेः । कथं वा प्रत्यक्षं निर्णयस्य हेतुः विकल्पत्वात्[5] ? अथ तद्वासनैव हेतुर्निर्णयस्य प्रत्यक्षं तु केवलं तद्बोधकमिति चेत्; नेदानीं प्रत्यक्षेण किञ्चित्, अर्थस्यैव चक्षुरादिकमभिपतनस्तद्बोधकत्वोपपत्तेः. अचेतनस्य कथं तद्बोधकत्वमिति चेत् ? कथं दर्शनहेतुत्वम् ? सामर्थ्यादिति समानमन्यत्र । तन्न प्रत्यक्षान्निर्णयसम्भवो यतस्तत्प्रमाणम् । संभवेऽपि मुख्यतः तस्यैव प्रामाण्यात्, प्रत्यक्षं सन्निकर्षादिवत्तस्य हेतुरेव न प्रमाणमिति स्थितम् ।

प्रमाणवन्नयानामप्य[6]धिगमहेतुत्वम् "**प्रमाणनयैरधिगमः** [त० सू० १।६] इति सूत्रे, [7]कामतस्तेऽपि विप्रतिपत्तिनिरासेन निर्णेतव्या इति चेत्; अत्राह––

**इष्टं तत्त्वमपेक्षातो नयानां नयचक्रतः** ॥९१॥ इति ।

स्याद्वादप्रविवेचितार्थैकदेशगोचरः[8] प्रतिपत्त्रभिप्रायो नयः । स च द्विधा अर्थनयः शब्दनयश्चेति । प्राच्यः पुनश्चतुर्धा नैगमः सङ्ग्रहो व्यवहार ऋजुसूत्र इति । पश्चिमस्त्रेधा– शब्दः समभिरूढः एवम्भूत इति । तत्र यस्मिन् द्वयोर्भेदगमनं स नैगमः नैकं गमो नैगमः इति व्युत्पत्तेः, यथा गुणगुणिनौ क्रियातद्वन्तौ सामान्यविशेषौ च भिन्नाविति । सम्यक् एकत्वेन सर्वग्रहणं सङ्ग्रहः, यथा सर्वमेकं सदविशेषादिति । सङ्ग्रह[9]विषयस्य पुनर्व्यवहरणं विभजनं व्यवहारः, यथा यत्सत्तद्द्रव्यं गुणः कर्म[10] चेति । ऋजु प्रगुणं सूत्रणमृजुसूत्रः, यथा सर्वं वर्त्त- मानमात्रमेव न पूर्वं नापि पश्चादिति । कालादिभेदादर्थभेदकारी शब्दः । तत्र कालभेदात् अभूद्भवति भविष्यतीति, कारकभेदात् वृक्षं पश्य, वृक्षाय जलं देहीति, लिङ्गभेदादर्थश्चमर्द्धर्चः[11] इति । पर्यायभेदादर्थभेदकृत् समभिरूढः, यथा शक्नादेव शक्रो न पूर्दारणात्, ततोऽपि पुरन्दर एव न शक्र इति । क्रियाश्रयस्त्वेवम्भूतः, पुरं दारयन्नेव पुरन्दरो नान्यदेति । तदेतेषां सप्तविकल्पानामवान्तरविकल्पादनेकप्रकाराणां नयानाम् **अपेक्षातः** प्रतिपत्त्रौदासीन्य-

---

१ –दिव वृत्तिः आ०, ब०, प० । समासः । २ निर्णये व्यव– आ०, ब०, प० । ३ –यतो- वस्तुविषयेपि ता० । ४ –दर्थजातीया– आ०, ब०, प० । ५ –त्वात्तद्वासनैव आ०, ब०, प० । ६ –मप्यभ्यधि– आ०, ब०, प० । ७ कालतस्ते आ०, ब०, प० । ८ –चरप्रति– आ०, ब०, प० । ९ –हनयस्य आ०,ब०,प० । १० कर्मेति चेति आ०, ब०, प० । ११ –दादर्थमर्धर्चः प– आ०,ब०,प० ।

लक्षणयाऽपेक्षया **तत्त्वं** श्रुतविकल्पत्वेन प्रमाणत्वम् **इष्टमभ्युपगतम्**, अन्यथा दुर्नयत्वेन तदनुपपत्तेः। तच्च तेषां तत्त्वं विस्तरतो **नयचक्रतः** तन्नामधेयाच्चिरन्तनशास्त्रात् प्रतिपत्तव्यम्।

तदेवं व्यवस्थापितप्रामाण्यस्य प्रवचनस्य शास्त्रान्ते प्रयोजनमाह—

**मिथ्यात्वं सौगतानां कणचरसमयं कापिलीयं प्रमेयं**
**प्रागल्भ्यं शावराणां जिनपतिविहिताशेषतत्त्वप्रकाशे।** ५
**पर्याप्तत्वं व्यपोहन्नुपहसनमयं प्रस्तुवन्न्यायमार्गे**
**स्याद्वादः सर्ववादप्रवणगुणगणः श्रेयसे नोऽस्तु नित्यम् ॥६२॥** इति।

**अयमस्मिन्प्रस्तावे** निरूपितः **स्याद्वादो** भगवत्प्रवचनं **श्रेयसे नोऽस्तु नित्यम्**। कीदृशः ? **सर्वस्मिन् वादे** प्रत्यक्षा[1]दिस्थानत्रयलक्षणे **प्रवणं** समग्रं **गुणानां** निर्दोषत्वादीनां **गणः** समूहो यस्मिन् स तथोक्तः। किं कुर्वन्निति चेत् ? उच्यते, सुगतस्येमे **सौगताः** तेषाम्, १० बहुवचनादन्येषामपि तादृशानां **यन्मिथ्यात्वं** सर्वं स्वप्नादिवद्भ्रान्तमेव न तत्त्वतः[2] किञ्चिदिति, यश्च कणचरस्य वैशेषिकतन्त्रकृतः समयः परस्परव्यतिरिक्त-द्रव्यगुणादि-पदार्थोपदेशः, अक्षपादसम[3]यस्यापृथग्वचनं कणचरसमयादविशेषात्। यदपि **कापिलीयं** कपिलशिष्याणां प्रमेयं व्यक्ताव्यक्तज्ञानृविकल्पम्, यच्चापि शावराणां प्रागल्भ्यं स्वतः प्रामाण्यादिपरिक[4]ल्पनपाटवं सर्वमेतद्व्यपोहन्निराकुर्वन् इति। न केवलमिदमेव अपितु योऽसौ १५ **जिनपतेः** सम्बन्धी [5]**विशेषेण हितो** विनेयलोकस्या**शेषाणां** सूक्ष्मादिभेदानां **तत्त्वानां प्रकाश**स्तस्मिन् यदुपहसनम्–एवं यत्केवलज्ञानम्"–[मी० श्लो० चो० श्लो० १४१] इत्यादिमीमांसकस्य, "**तस्मादनुष्ठेयगतम्**" [प्र० वा० १।३३] इत्यादि सौगतस्य तदपि व्यपोहन्निति। किं कुर्वन् व्यपोहति ? **न्यायमार्गे** प्रत्यक्षादिरूपे **पर्याप्तत्वं** भावानां सौगतादिकल्पनाविपर्ययेण यत् **परि** समन्तात् **आप्तत्वं** तत्**प्रस्तुवन्** प्रकटयन्, अन्यथा तद्व्यपोहनानुपपत्तेः। किं पुनस्तच्छ्रेयो यदर्थत्वं स्याद्वादस्याशास्यते इति चेत् ? सकलावरणपरिक्षयविजृम्भितं केवलज्ञानमेव। तदेवाह— २०

**नैकान्तक्षायिकाणाम् [अतिशयमवदन्नैव नानार्थसाध्यम्,**
**नैष्किञ्चन्यं तपो वाऽविगलितसकलक्लेशराशेर्विनाशे।**
**निष्पर्यायं प्रवृत्तं सकलविषयगं केवलं वेद नित्यम्,** २५
**योऽयं तस्मै नमामस्त्रिभुवनगुरवे शम्भवे शान्तये ते ॥]६३॥** इत्यादि।

**नैकान्तो**ऽनेकान्तः नशब्देन समासात्। अनेकान्तेनाऽनेकप्रकारेण क्षया एव कर्मणां **क्षायिकाः** स्वार्थिकत्वात्प्रत्ययस्य तेषाम् **अतिशयं** तारतम्यं **अवदन्नेव** प्रतिषेधद्वयेन विधिप्रतिपत्तेः। स एवातिशयः कुतः सिद्ध इति चेत् ? तन्निबन्धनात्[6] ज्ञानातिशयादेव। अस्ति चायम्–असहायेन्द्रियादारभ्य आशास्त्रविदः प्रतीयमानत्वात्, अतश्च तत्प्रतिपत्तिः। ३० अत एवाह–**नानार्थसाध्यम्** इति नाना चासावतिशयवत्त्वादर्थश्च प्रयोजनं ज्ञानलक्षणं। **नानार्थस्तेन साध्यमनुमेयं** तेषामतिशय[7]मवदन्नेवेत्यनेन [8]हेतूक्तः (तुरुक्तः)। साध्यं पुनरस्य

१ –क्षादिस्थान– आ०, ब०, प०। २ –तः कथञ्चिदिति आ०, ब०, प०। ३ –यस्य पृथ– आ०, ब०, प०। ४ –कल्पितेन आ०, ब०, प०। ५ विशेषहितो ता०। ६ –बन्धनज्ञानाति– आ०, ब०, प०। ७ –मवदन्येवे– आ०, ब०, प०। ८ हेत्यूक्तः साध्यं ता०।

क्वचित्तदतिशयस्य परिनिष्ठितत्वम्। तथा हि यदतिशयवत् तत् क्वचित्परिनिष्ठितं यथा [1]परिमाणम्, अतिशयवांश्च कर्मणां क्षय इति। यत्र च तत्परिनिष्ठा तज्ज्ञानं सर्वविषयं भवति। तथाहि–यद्यत्र व्यपगतावरणं ज्ञानं तस्य तद्ग्राह्यं यथा नीहाराद्यपगमे प्रत्यक्षस्य वृक्षादि, व्यपगतावरणं च कस्यचिद् ज्ञानं सर्वत्रेति। तदेवाह–**अविगलितेत्यादि**।
५ योऽयमेवमवदन्नैव **वेद** वेत्ति **सकलविषयगं केवलं** केवलज्ञानं नित्यमविनश्वरं **निष्पर्याय**मक्रमम्। उपलक्षणमिदं तेन निष्करणं निर्व्यवधानं च। कदा तत्प्रवृत्तम्? **अविगलितो** यः **सकलानां क्लेशानां** कर्मतदास्रवरूपाणां **राशि**स्तस्य **विनाशे प्रवृत्तम्**। कुतस्तद्विनाशोऽपीति चेत्? तपस एव। तदाह–**नैष्किञ्चन्यं तपो वा** इति। **वे**ति समुच्चये। तपो हि बहिरन्तर्विकल्पं तद्विनाशोपायं योऽयं वेद। कीदृशम्? **नैष्किञ्चन्यम्**। ननु तत्त्वज्ञान-
१० भावनं तपस्तत्कथं नैष्किञ्चन्यमिति चेत्? न; सत्येव तस्मिन्निस्पृहत्वरूपे तदुपपत्तेः। अत एवोक्तम्–

"**समाधितन्त्रस्त**[2]**दुपोहपत्तये, द्वयेन नैर्ग्रन्थ्यगुणेन चायुजम्।**" [ ] इति। **तस्मै** योऽयं वेदेत्युक्ताय **नमाम** इत्यादि सुगमम्। चतुर्थी तु सर्वत्र "**गत्यादिभिर्बहुलम्**" [ शाक० १।३।१३९ ] इति। ततः सूक्तम्–

१५ **नैकान्तत्तायिकाणामतिशयमवदन्नैव नानार्थसाध्यम्,**
**नैष्किञ्चन्यं तपो वाऽविगलितसकलक्लेशराशेर्विनाशे।**
**निष्पर्यायं प्रवृत्तं सकलविषयगं केवलं वेद नित्यम्,**
**योऽयं तस्मै नमामस्त्रिभुवनगुरवे शम्भवे शान्तये ते ॥**

पुनरपि शासनस्याराध्यत्वं फलवत्त्वेन दर्शयन्नाह–

२० **युक्तायुक्तपरीक्षणक्षमधियामत्यादराराधिनाम्,**
**संसेव्यं परमार्थवेदसकलध्यानास्पदं शाश्वतम्।**
**लोकालोककलावलोकनबलप्रज्ञागुणोद्भूतये**
**आभव्यादकलङ्कमङ्गलफलं जैनेश्वरं शासनम् ॥६४॥** इति ॥

जिनेश्वरस्येदं **जैनेश्वरं शासनम्**। कीदृशम्? **परमार्थस्य** जीवादेर्यो **वेदो** बोधो
२५ यत्र **सकलं** [4]धर्मशुक्लविकल्पं **ध्यानं** तयोरास्पदं **शाश्वतं** प्रबन्धतो नित्यम्। पुनरपि कीदृशम्? **अकलङ्कमङ्गलफलं** निर्दोषप्रशस्तविविधकल्पाभ्युदयप्रयोजनम्। आकुतस्तथेति चेत्? आह–[5]वृदभवस्य (अभवस्य) भाव आभव्यम् आ तस्मादाभव्याद[6]मुक्तिपदादिति। तत्किम्? **संसेव्यमभियोक्तव्यम्**। केषाम्? **युक्तायुक्तपरीक्षणक्षमधियाम्** उपपन्नेतरवस्तुविचारपटुतरप्रज्ञानाम्[7]। कीदृशानाम्? **अत्यादराराधिनां** प्रशस्तश्रद्धया आराधन-
३० शीलानाम्। तत्तेषां किमर्थं संसेव्यम्? अत्रोत्तरं **लोके**त्यादि। **लोकालोकयोः** याः **कला** विविधविकल्पाः अणुप्रभृतिप्रतिपत्तिवेद्या भागाः तासाम**वलोकनं** निरवशेषदर्शनं तत्र **बलं** यस्य **प्रज्ञागुणस्य तस्योद्भूतये** इति।

---

१ परिणाममति– आ०, ब०, प०। २ –दृविवेति आ०, ब०, प०। ३ –दुपोपपत्तये आ०, ब०, प०। ४ धर्म्यशुक्ल– आ०, ब०, प०। ५ ब्यादभवस्य भाव आभव्यमित्यपि पाठः। भव्यस्य आ०, ब०, प०। ६ –मुक्तिपादादि– ता०। ७ –नामत्यादरा– आ०, ब०, प०।

श्रीमन्न्यायविनिश्चयस्तनुभृतां चेतोद्रुगुर्वीनलः,
सन्मार्गं प्रतिबोधयन्नपि च ताभिःश्रेयसप्रापणम् ।
येनायं जगदेकवत्सलधिया लोकोत्तरं निर्मितो
देवस्तार्किकलोकमस्तकमणिर्भूयात्स वः श्रेयसे ॥१॥

विद्यानन्दमनन्तवीर्यसुखदं श्रीपूज्यपादं दया-
पालं सन्मतिसागरं कनकसेनाराध्यमभ्युद्यमी ।
शुद्ध्यन्नीतिनरेन्द्रसेनमकलङ्कं वादिराजं सदा,
श्रीमत्स्वामिसमन्तभद्रमतुलं वन्दे जिनेन्द्रं मुदा ॥२॥

भूयो भेदनयावगाहगहनं देवस्य यद्वाङ्मयं
कस्तद्विस्तरतो विविच्य वदितुं मन्दप्रभुर्मादृशः ।
स्थूलः कोऽपि नयस्तदुक्तिविषयो व्यक्तीकृतोऽयं मया,
स्थेयाच्चेतसि धीमतां मतिमलप्रक्षालनैकक्षमः ॥३॥

व्याख्यानरत्नमालेयं प्रस्फुरन्नयदीप्तिभिः[1] ।
क्रियतां हृदि विद्वद्भिस्तुदन्ती मानसं तमः ॥४॥

श्रीमत्सिंहमहीपतेः परिषदि प्रख्यातवादोन्नति-
स्तर्कन्यायतमोपहोदयगिरिः सारस्वतः[2] श्रीनिधिः ।
शिष्यः श्रीमतिसागरस्य विदुषां पत्युस्तपःश्रीभृतां
भर्तुः सिंहपुरेश्वरो विजयते स्याद्वादविद्यापतिः ॥५॥

इत्याचार्यवर्यस्याद्वादविद्यापतिविरचितायां न्यायविनिश्चयतात्पर्यावद्योतिन्यां व्याख्यानरत्नमालायां तृतीयः प्रस्तावः समाप्तः ।

समाप्तं च शास्त्रम् ।

ॐ नमो वीतरागाय । ॐ नमः सिद्धेभ्यः ।
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।

---

१–दीधितिः इत्यपि पाठः । २–स्वतं श्री–ता० ।

# न्यायविनिश्चयस्य कारिकार्धानामकाराद्यनुक्रमः

[ अनुक्रमणिकायाम् पृ० ३७८ पं. १२ "प्रतिक्षणं विशेषा न" इत्यनन्तरं निम्नलिखिताः श्लोकार्धाः प्रच्युताः— ]

# न्यायविनिश्चयविवरणस्यश्लोकानामनुक्रमणिका

# न्यायविनिश्चय-विवरणगतावतरणसूची

भाग पृष्ठ

# न्यायविनिश्चयगताः केचन विशिष्टाः शब्दाः

# न्यायविनिश्चयविवरणगता ग्रन्था ग्रन्थकाराश्च

# न्यायविनिश्चयविवरणगताः केचन विशिष्टाः शब्दाः

# मूलटिप्पण्युपयुक्तग्रन्थसङ्केतविवरणम्

अक० टि०—अकलङ्कग्रन्थत्रयम्, टिप्पणी [ सिंघी जैन सीरिज, कलकत्ता ]
प्रथम खण्ड ६६, ३५८, ३६३, ४४०, ५३४
द्वि० ख० २२५, ३१९, ३५४

अपोहसि०—अपोहसिद्धिः [ एशियाटिक सोसाइटी कलकत्ता ]
प्र० ख० १३१

अभिधर्मको०—अभिधर्मकोश [ज्ञानमण्डल प्रेस, काशी]
प्र० ख० १४

अभिस०—अभिसमयालोकालङ्कार [ गायकवाड सीरिज बड़ौदा ]
प्र० ख० ३६४

अवयविनि०—अवयविनिराकरणम् [ एशियाटिक सोसाइटी कलकत्ता ]
प्र० खं० ३६८, ३७०, ३७१

अष्टश०—अष्टशती अष्टसहस्र्यां मुद्रिता [ निर्णयसागर प्रेस, बम्बई ]
प्र० ख० ५, ५४, ३०१

अष्टसह०—अष्टसहस्री [ निर्णयसागर प्रेस, बम्बई ]
प्र० ख० ५४, ५७, ११७, ३०१, ४७२
द्वि० ख० ११९, २४२,

आप्तप०—आप्तपरीक्षा [जैनसिद्धान्तप्रकाशिनी संस्था, कलकत्ता ]
प्र० ख० ३८

आप्तमी०—आप्तमीमांसा, [ जैनसिद्धान्तप्रकाशिनी संस्था, कलकत्ता ]
प्र० ख० २५, २७, ११३, ४१५, ४३७, ४३९, ४६९; ४८५
द्वि० ख० १८, १९, २३३, २५५, २९८, ३६५

ईशा०—ईशावास्योपनिषद् [गीता प्रेस, गोरखपुर ]
प्र० ख० ३१०, ३११

उत्तरा०—उत्तराध्ययन सूत्रम् [ आगमोदय समिति, सूरत ]
प्र० ख० ४२८

ऋग्—ऋग्वेद० [ आनन्दाश्रम सीरिज, पूना ]
द्वि० ख० ३४

ऐत०—ऐतरेय ब्राह्मण [ आनन्दाश्रम सीरिज, पूना ]
प्र० खं० ४३८

कठो०, कठोप०—कठोपनिषद् [गीता प्रेस, गोरखपुर]
प्र० ख० ३११, ३५१, ३५२, ४३८, ४५८, ५१०
द्वि० ख० ९०, २७३, २७६

कात०—कातन्त्र व्याकरण
प्र० ख० ५०५

काशि०—मीमांसाश्लोकवार्तिकस्य सुचरितमिश्र विरचिता काशिका टीका [ त्रिवेंद्रम ]
प्र० ख० ५०६

किरणा०—किरणावली [चौख० काशी]
प्र० ख० ४३९

कौषी०—कौषीतकि ब्राह्मणम [आनन्दाश्रम सीरिज, पूना ]
प्र० ख० ३५०

चतुःश०—चतुःशतकम् [ विश्वभारती ग्रन्थमाला, शान्तिनिकेतन ]
प्र० खं० ३६६

छान्दो०—छान्दोग्योपनिषद् [ गीताप्रेस, गोरखपुर ]
प्र० खं० १७६, ३१४, ३४४, ३५२, ४५८, ४६३, ४६४, ४६५, ४७६, ५१३, ५३३
द्वि० खं० १६, ३८, ४२, ९०, १६४, २७६, २८०, ३०१, ३३४, ३५१

जयध०—जयधवलाटीका, [ दि० जैनसंघ मथुरा ]
प्र० खं० ६६

जैनतर्कवा०—जैनतर्कवार्तिकवृत्तिः [ सिंघीजैन सीरीज ]
द्वि० खं० १८१

जैनेन्द्र०—जैनेन्द्र व्याकरण [ जैनसिद्धान्तप्रकाशिनी संस्था कलकत्ता ]
प्र० खं० ५४१
द्वि० खं० ३१९

जैने० महा०—जैनेन्द्र महावृत्तिः [ ज्ञानपीठसत्का ]
प्र० खं० ५८

जैमिनि०—जैमिनीसूत्रम्
द्वि० खं० ३१८, ३१९

न्यायसा०—न्यायसारः [ एशियाटिक सोसाइटी, कलकत्ता ]
प्र० ख० ४१८
द्वि० ख० २०६

न्यायसू०—न्यायसूत्रम्
प्र० ख० ४१, ९१, १७९, २२१, २२३, ४१४, ५३५,
द्वि० ख० ११४, १८१, २३४, २४२, २४३, २४४, ३६१

न्यायसू० भा०—न्यायसूत्रभाष्यम् [ चौक, काशी ]
प्र० ख० ३७३

पञ्चास्ति०—पञ्चास्तिकायः [ रायचन्द्रशास्त्रमाला, बम्बई ]
प्र० ख० ४२८

परमात्मप्र०—परमात्मप्रकाशः [ रायचन्द्र शास्त्रमाला, बम्बई ]
प्र० ख० ४२८

परीक्षामु०—परीक्षामुखसूत्रम्
प्र० ख० ११९

पाणिनि० / पा० व्या० / पा० सू० } पाणिनि व्याकरणम्
प्र० ख० ५८, २५२
द्वि० ख० ११८, ३१९

पात० म० / पा० महा० } पातञ्जलमहाभाष्यम् [ चौखम्बा सीरीज, काशी ]
प्र० ख० २
द्वि० ख० ३२२

पा० म० पस्प०—पातञ्जल महाभाष्यम् पस्पशाह्निकम् [ चौखम्बा, काशी ]
प्र० ख० २८

प्रक० प०—प्रकरणपञ्जिका [ चौखम्बा सीरीज, काशी ]
प्र० ख० ३१, ७१

प्रज्ञाप० सू०—प्रज्ञापनासूत्रम् [ आगमोदय समिति ]
प्र० ख० ६६

प्र० परी० / प्रमाण प० } प्रमाणपरीक्षा [ जैनसिद्धान्त प्र० संस्था, काशी ]
प्र० ख० ५६, २२१, ३८६
द्वि० ख० २२५

प्रमाण मी०—प्रमाणमीमांसा [ सिंघी जैन सीरिज, कलकत्ता ]
प्र० ख० ३८६
द्वि० ख० २३६

प्र० वा० / प्रमाणवा० } प्रमाणवार्तिकम् [ बिहार उड़ीसा रिसर्च सोसाइटी ]
प्र० ख० ९, १०, ११, १४, १५, १७, १८, १९, २१, २२, २३, २४, ३२, ३५, ३६, ३७, ३८, ४२, ४६, ४९, ६८, ६९, ७७, ७८, ८१, ८६, ८८, ९०, ९१, ९३, ९४, १००, १०२, १०८, १०९, १११, ११२, ११७, ११८, १२८, १२९, १४२, १४७, १५१, १५५, १५६, १६०, १६२, १६९, १७७, १८४, १९४, १९६, १९८, १९९, २४०, २४२, २४३, २४९, २५१, २५२, २५३, २५४, २५७, २५९, २६२, २६३, २६४, २६५, २६६, २६७, २६८, २६९, २७०, २७३, २७४, २७५, २८५, २८९, २९४, २९८, २९९, ३०५, ३०६, ३०७, ३१२, ३१७, ३१८, ३२०, ३२१, ३२३, ३२६, ३३१, ३४०, ३४९, ३५४, ३५७, ३५८, ३५९, ३६४, ३६८, ३७०, ३७९, ३८०, ३८६, ३८७, ३८९, ३९१, ३९६, ३९७, ३९९, ४००, ४०१, ४०४, ४०५, ४२१, ४२६, ४३०, ४४१, ४४४, ४६६, ४६९, ४७८, ४७९, ४८०, ४८१, ४८२, ४८३, ४८७, ४८८, ४९३, ५०१, ५०४, ५१५, ५१६, ५१९, ५२१, ५२४, ५२७, ५२८, ५२९, ५३२, ५३३
द्वि० ख० ९, ११, १३, १४, १५, १६, २०, २१, २२, २३, ३६, ४९, ५०, ५१, ५२, ५४, ७६, ८३, ८४, ८६, ८९, ९९, १०१, १०३, ११२, ११६, ११७, १२३, १४१, १४९, १५२, १५४, १५७, १६२, १६६, १६७, १६८, १६९, १७२, १७५, १७६, १७८ १८०, १८३, १८६, १८८, १८९, १९७, १९८ २००, २१६, २२६, २३०, २३३, २३७, २४१ २५१, २५३, २५४, २५८, २६०, २६१, २६२ २६३, २६५, २६६, २६७, २६८, २६९, २७० २८२, ३२०, ३२३, ३२७, ३३८, ३३९, ३४१ ३४२, ३४३, ३४४, ३४५, ३६०, ३६१, ३६५ ३६६, ३६७

प्र० वार्तिकाल—प्रमाणवार्तिकालंकारः [भिक्षु राहुल सांकृत्यायनसत्कः ]

सा० माठर०—सांख्यकारिका माठरवृत्तिः [ चौखंबा काशी ]
  प्र० ख० ३१, ५४, २२९, ५२४
  द्वि० ख० २७२

सां० तत्त्वकौ० } सां० त० कौ० } सांख्यतत्त्वकौमुदी [ चौखम्बा काशी ]
  प्र० ख० ३१, ४७१
  द्वि० ख० १८१, २०८

सि० कौ०—सिद्धान्तकौमुदी
  प्र० ख० ३३, ३४

सिद्ध० द्वात्रिं०—सिद्धसेनद्वात्रिंशिका [भावनगर]
  द्वि० ख० २५६

सिद्धिवि०—सिद्धिविनिश्चयः सिद्धिविनिश्चयटीकातः समुद्धृतः [ सम्पादकसत्कः ]
  प्र० ख० ६३, ६६, ७०, ९८, १६८, १६९, १७९, १८१, २३१, २३३, ३०४, ३७६, ३८३, ३९१, ४०८, ४१४, ४१७, ४१८, ४३२, ४४१, ४७५, ४९३, ४९६, ५२०, ५२१
  द्वि० ख० ९, ३४, ४१, ५२, ११०, १३३, १६१, १६२, १६६, १८१, २३१, २३८, २५२, ३२१, ३६५

का०—कारिका

गा०—गाथा

परि०—परिच्छेदः

प्र०—प्रस्तावः

श्लो०—श्लोकः

सिद्धिवि० टी०—सिद्धिविनिश्चयटीका [ पं० सुखलालसत्का ]
  प्र० ख० ५५, ६४, ११६

स्फुटार्थ० अभि०—स्फुटार्था अभिधर्मकोशव्याख्या [ बिब्लोथिका बुद्धिका रशिया ]
  प्र० ख० २, ८२

स्फोटसि०—स्फोटसिद्धिः [ मद्रास यूनि० ]
  द्वि० ख० ३२९, ३३०, ३३१, ३३२

स्या० र० } स्या० रत्ना० } स्याद्वादरत्नाकरः [ अर्हत्प्रभाकर कार्यालय, पूना ]
  प्र० ख० ५६, २१६, २२१
  द्वि० ख० १८१, ३३९

हेतुबि०—हेतुबिन्दुः [ बड़ौदा सीरीज ]
  प्र० ख० २८३, ३६५
  द्वि० ख० १५२

हेतुबि० टी०—हेतुबिन्दुटीका [ बड़ौदा सीरीज ]
  प्र० ख० ११, ५५, ११९, १३३, १५१, ३२१, ३८५, ४४६, ४४७, ४४८, ४४९, ४५२, ४६८
  द्वि० ख० १५५, १५६, १७९, १९१, १९७, १९८, ३५४

हैम० वृ०—हैमशब्दानुशासनवृत्तिः [ बंबई ]
  प्र० ख० ५८

---

मुद्रक—ओम्प्रकाश कपूर, ज्ञानमण्डल यन्त्रालय, बनारस, ४४४६-१०